4. శ్రీ నిరతాన్నదాత్రి డొక్కా సీతమ్మగారి జీవితచరిత్ర :- వచనము గ్రంథకర్త : మిత్రిపాటి సీతారామచయనులుగారు ప్రాథమిక పాఠశాలా ప్రధానోపధ్యాయులు, లంకల గన్నవరము. క్రౌను పుటలు 88 వెల రు 1—4—0

గోదావరీ మండలమందలి లంకలగన్నవరము వాస్తవ్యులు కీర్తిశేషులు శ్రీ డొక్కా జోగన్నగారు వారి సాధ్వీమణి సీతమ్మగారు పూర్వపుఁ గఱవుదినములలో నిరతాన్న ప్రదానమున విశ్వవిశ్రుతి గన్న పుణ్యదంపతులు. ఎట్టిపట్టుల నెంతమాత్రము వెనుదీయక యీ దంపతులు నిజధర్మవ్రతాచరణమును నిర్వహించిన ఘట్టములెన్నియో యాప్రాంతముల పాడుక కథలుగా వెలసినవి. అతిథులయెడ, అన్నాతురులయెడ శ్రీ సీతమ్మగారు ప్రకటించెడి యౌదార్యము, ఆదరణము వర్ణనాతీతములు. ఈమె జీవిత కథాఘట్టములఁ జెక్కంటిని సేకరించి గ్రంథరూపమున వెలయించి గ్రంథకర్తగారా సాధ్వీమణిని జిరస్మరణీయఁగఁ జిత్రించి ధన్యులయినారు. ఆబాలగోపాలము సుబోధకమగు చక్కని సులభగ్రాంథిక శైలిలో నిది రచింపఁబడినది. విద్యాధికారు లీ గ్రంథమును బాఠశాలలోఁ బఠనీయముగా నిర్ణయించినచో వారి జీవితములందు త్తమ భావములను రేకెత్తించుట కిది యుపకరింపఁ గలదు ఆంధ్రప్రదేశ్ రెవిన్యూమంత్రి శ్రీ కళా వేంకటరావుగారు సంగ్రహముగఁ గూర్చిన శ్రీ సీతమ్మగారి జీవితచరిత్రము, విద్వచ్ఛిరోమణులు శ్రీ పుల్య ఉమామహేశ్వరశాస్త్రి, వెంపరాల సూర్యనారాయణశాస్త్రి మున్నగువారొసంగిన యభిప్రాయములు గ్రంథారంభమున ముద్రితములయి యీకృతి కనూనశోభను వెలార్చుచున్నవి. ఆంధ్రప్రదేశ విద్యాధికారులు పాఠశాలలందు, పఁజాపఠనాలయములందు గ్రంథభాండారములలోఁ దీనిని జేర్చుటకామోదము నొసంగియున్నారు.

भवेत्स चेदानीं स्कन्धानुपादद्यात । उपादाय च स्कन्धान्पश्चात् स्कन्धवानपि भवेत । तादृशस्तु तथागतो नास्ति । निर्हेतुकत्वप्रसङ्गादिति भावः ॥५॥

एवं च—

**स्कन्धांश्चाप्यनुपादाय नास्ति कश्चित्तथागतः ।**
**यश्च नास्त्यनुपादाय स उपादास्यते कथम् ॥६॥**

निर्हेतुकत्वप्रसङ्गात् स्कन्धाननुपादाय पूर्वं तथागतोस्ति । यश्च तादृशो नास्ति सोऽविद्यमानत्वात्कथं स्कन्धानुपादातुं प्रभवतीति वक्तव्यम् । न कथंचित्प्रभवतीति भावः ॥६॥

यदैव तथागतः उपादानात्पूर्वमविद्यमानत्वान्न किंचिदप्युपादत्ते तदा—

**न भवत्यनुपादानमुपादानं च किंचन ।**
**न चास्ति निरुपादानः कथंचन तथागतः ॥७॥**

उपादात्रधीना हि उपादानानुपादानव्यवस्था, न तमन्तरेणोपपद्यते । पूर्वसिद्धस्योपादातुरभावादुपादानं नास्ति । तदभावे निरुपादानस्तथागतोपि कथं चनापि न भविष्यतीति भावः ॥७॥

एवं च—

**तत्त्वान्यत्वेन यो नास्ति मृग्यमाणोपि पञ्चधा ।**
**उपादानेन स कथं प्रज्ञप्येत तथागतः ॥८॥**

प्रागुक्तपञ्चप्रकारैः मृग्यमाणो विचार्यमाणोपि यः स्कन्धरूपतया तदन्यत्वेन वा नास्ति स तथागतः अत्यन्तमविद्यमानः कथमुपदानेन प्रज्ञपयितुं शक्यः । तस्मान्नास्ति स्वभावतस्तथागत इति भावः ॥८॥

प्रकारान्तरेणापि तथागतो नास्तीति प्रतिपादयन्नाह—

**यदपीदमुपादानं तत्स्वभावान्न विद्यते ।**
**स्वभावतश्च यन्नास्ति कुतस्तत्परभावतः ॥९॥**

यदिदमुपादानं रूपवेदनाविज्ञानसंज्ञासंस्काराख्यपञ्चस्कन्धरूपं तदपि स्वभावेन नास्ति । प्रतीत्यसमुत्पादात् । स्कन्धपरीक्षायां विस्तरेण प्रतिषिद्धत्वाच्च । यच्च स्वभावेन नास्ति तत्परभावेनापि न सम्भवत्येव । न हि वन्ध्यापुत्रः स्वभा-

वेनाविद्यमानः परभावेनास्तीति शक्यते वक्तुम् । तस्मान्नास्ति स्वभावपरभावाभ्यामुपादानम् । अथवा उपादातृसापेक्षत्वादुपादानं स्वभावेन नास्ति । तस्मादुपादाता तथागतोपि स्वभावपरभावाभ्यां नास्तीति सिद्धमिति भावः ॥९॥

इदानीं यथाप्रदर्शितमेवार्थमुपपादयन्नाह—

**एवं शून्यमुपादानमुपादाता च सर्वशः ।**
**प्रज्ञप्यते च शून्येन कथं शून्यस्तथागतः ॥१०॥**

एवमुक्तेन प्रकारेणोपादानं स्कन्धपञ्चकं शून्यं, निस्स्वभावम् । उपादातापि शून्यो निस्स्वभावः । तथा च निस्स्वभावेन स्कन्धपञ्चकेन कथं निस्स्वभावः तथागतः प्रज्ञप्यते? नह्यविद्यमानेनाविद्यमानस्य प्रज्ञप्तिरस्तीति भावः ॥

ननु वयं स्वविकल्पविकल्पितानि कणभक्षाक्षपादाद्युपज्ञानिदर्शनान्तराणि परित्यज्य, निरवशेषान्यतीर्थीय मतान्धकारविघटकं, स्वर्गापवर्गानुगाम्यविपरीतमार्गसंप्रकाशकं, सद्धर्मदेशनाकिरणव्याप्त्यशेषविविधविनेयमतिकमलमुकुलविबोधनतत्परं, यथावदवस्थितसकलपदार्थतत्त्वावभासनक्षमसकललोकचक्षुर्भूतं, सकलजगच्छरण्यं, दशबलवैशारद्यावेदितातिभास्वरबुद्धधर्मामलमण्डलं, महायानमहानयसारथिवरं, बोधोत्तुङ्गतुरङ्गमं, सकलत्रिभुवनजनजातिजरामरणसंसारकान्तारसरिदुच्छोषणतत्परं, चतुरारातिमारसमरशरसम्पातविजयिनं, तथागतसवितारं, अज्ञानमहान्धकारनिराकरणाय शरणं प्रपन्नाः, तस्य चासत्त्वं ब्रुवता भवता तथागतमहादित्यप्रच्छादकेन, अकालिकघनघनावलीप्रसरणजगदन्धकारोपमेन, नास्माकं सम्बन्ध इति चेदुच्यते— अत एव हेतोरस्माकं प्रत्याशा भवद्विधेषु बुद्धजनेषु यदि भवन्तो मोक्षकामतयाऽन्यतीर्थिकमतानि परित्यज्य भगवन्तं तथागतमेव परमशास्तारं, प्रतिपद्यापि परमगभीरमनुत्तरं, सर्वतीर्थासाधारणं, नैरात्म्यसिंहनादमसहमानास्तुरङ्गमा इव विविधकुदृष्टिव्यालमालाकुलं, विपर्यस्तजनानुगतं, तमेव महाघोरसंसाराटवीसञ्चारानुगुणं मार्गं गाहन्ते, नहि तथागताः कदाचिदध्यात्मनः स्कन्धानां चास्तित्वं प्रज्ञपयन्ति । नहि वयमपि स्कन्धानां तथागतस्य च सर्वथैव नास्तित्वं ब्रूमः । अपि तु निस्स्वभावं तथागतं व्याचक्षाणेन, अविपरीतार्थमधिजिगमिषुणा योगिना ॥

न वक्तव्यं शून्यमित्यशून्यमिति वा भवेत् ।
उभयं नोभयं चेति प्रज्ञप्त्यर्थं तु कथ्यते ॥११॥

शून्यमेतत्तथागततत्त्वमिति वा, अशून्यमिति वा, शून्याऽशून्योभयात्मकमिति वा, अनुभयात्मकमिति वा न वक्तव्यम्। सर्वथाप्यनुपपत्तेः । भगवता बुद्धेन तु विनेयजनानुरोधेन संवृतिसत्त्वमङ्गीकृत्य यथावसरं क्वचिच्छून्यमिति, क्वचिदशून्यमिति, क्वचिदुभयं, क्वचिन्नोभयमिति विनेयानां प्रज्ञप्त्यर्थमेव कथ्यते। परमार्थतस्त्वस्मदुक्तैव सरणिरनुसर्तव्येति भावः । तस्मात्तथागते एताः कल्पना न सम्भवन्तीति ॥ ११॥

न केवलं शून्यत्वादिकमेव तथागते न सम्भवति । अपितु—

शाश्वताशाश्वताद्यत्र कुतः शान्ते चतुष्टयम् ।
अन्ताद्यपि चाप्यत्र कुतः शान्ते चतुष्टयम् ॥१२॥

इह भगवता चतुर्दशाव्याकृतानि वस्तूनि निर्दिष्टानि । यथा शाश्वतो लोकः, अशाश्वतो लोकः, शाश्वतोऽशाश्वतश्च लोकः, नैव शाश्वतो नैवाशाश्वतश्च लोक इति चतुष्टयमेकम् । अन्तवान् लोकः, अनन्तवान् लोकः, अन्तवाननन्तवांश्च लोकः, नैवान्तवान्न चैवान्तवांश्च लोक इति द्वितीयं चतुष्टयं। भवति तथागतः, मरणात्परं न भवति तथागतः, मरणात्परं भवति च न भवति च तथागतः, मरणात्परं न भवति न न भवति च तथागत इति तृतीयम् । जीवोन्यः, शरीरमन्यदिति द्वयम् । एतानि चतुर्दशवस्तूनि अव्याकृतत्वादव्याकृतवस्तूनि । तत्र शान्ते निस्स्वभावे तथागते पूर्वोक्तेन न्यायेन यथा शून्यादिचतुष्टयं न सम्भवति तथा शान्तत्वादीन्यव्याकृतचतुर्दशवस्तून्यपि न सम्भवन्तीति भावः ॥१२॥

एवं स्थिते—

येन ग्राहो गृहीतस्तु येनास्तीति तथागतः ।
नास्तीति कल्पयन् सः निर्वृतस्यापि कल्पयेत् ॥१३॥

येन पुंसा, येन महताभिनिवेशेन तथागत अस्तीति ग्राहः पक्षः गृहीतः,

यदि वा तथागतो नास्तीति वा मरणात्परमिति पक्षो वा गृहीतः । एवं विकल्पयन् सः निर्वृतस्यापि मोक्षस्यापि पूर्वोक्तं विकल्पं कल्पयेदेवेति भावः ॥१३॥

अतः—

स्वभावतश्च शून्येऽस्मिन् चिन्ता नैवोपपद्यते ।
परं निरोधाद्भवति बुद्धो न भवतीति वा ॥१४॥

स्वभावतः शून्येऽस्मिन् तथागते निरोधात्परं बुद्धः भवति वा न वेत्यादि चिन्ता नोपपद्यते ॥१४॥

वस्तुनिबन्धनो हि प्रपञ्चः । अवस्तुकश्च तथागतः । अतः प्रपञ्चातीतस्तथागतः । तमित्थंभूतं तथागतं स्वोत्प्रेक्षितमिथ्याविकल्पमलीमसमानसतया—

प्रपञ्चयन्ति ये बुद्धं प्रपञ्चातीतमव्ययम् ।
ते प्रपञ्चहतास्सर्वे न पश्यन्ति तथागतम् ॥१५॥

विविधैः परिकल्पनाविशेषैः प्रपञ्चातीतमनुत्पादेनावस्थान्तरगमनाभावादव्ययं बुद्धं ये प्रपञ्चयन्ति ये ते सर्वेऽपि स्वकल्पनाप्रपञ्चैरेव हतास्सन्तः तथागतं तत्त्वतो न पश्यन्तीत्यर्थः ॥१५॥

अनया तथागतपरीक्षया सर्वो लोकः परीक्षितो वेदितव्य इति प्रतिपादयन्नाह—

तथागतो यत्स्वभावः तत्स्वभावमिदं जगत् ।
तथागतो निस्स्वभावो निस्स्वभावमिदं जगत् ॥१६॥

यादृशस्वभावस्तथागतस्त दृशस्वभावमेवेदं जगत्, पूर्वोक्तरीत्या निस्स्वभावस्तथागत इति सिद्धम् । यथा च जगन्निस्स्वभावं तथा प्रत्ययपरीक्षादावुपदर्शितमेवेति भावः ॥१६॥

इति सुबोधिनीव्याख्यासहितमाध्यमिककारिकासु
तथागतपरीक्षा नाम द्वाविंशतितमं प्रकरणम् ।

———

# माध्यमिककारिकासु,

## विपर्ययपरीक्षानाम त्रयोविंशतितमं प्रकरणम् ।

नन्‌ कारणस्य क्लेशादेस्सद्भावाद्विद्यत एव भवसन्ततिः । इह हि रागादिरूपक्लेशेभ्यः कर्मोपजायते । ततश्च जन्ममरणपरम्परा, सैव भवसन्ततिरित्युच्यते । तस्याश्च प्रधानं कारणं क्लेशाः, प्रहीनक्लेशस्य भवसन्तत्यभावात् । तस्मात्कारणसद्भावादस्ति भवसन्ततिरिति चेदत्राह—

सङ्कल्पप्रभवो रागः द्वेषो मोहश्च कथ्यते ।
शुभाशुभविपर्यासान् सम्भवन्ति प्रतीत्य हि ॥१॥

सङ्कल्पः चित्तवृत्तिविशेषः । स रागद्वेषमोहानां साधारणं कारणम् । अन्येषामपि क्लेशानां सत्त्वेपि मुख्यत्वात्त्रयाणामेवेहोपादानं कृतम् । एते च क्लेशाः शुभाशुभविपर्यासान् प्रतीत्य सम्भवन्ति । अतश्शुभाशुभविपर्यासा एषामसाधारणानि निमित्तानि । तत्र शुभाकारं प्रतीत्य राग उत्पद्यते । अशुभाकारं प्रतीत्य द्वेषः । विपर्यासं प्रतीत्य मोहः ॥१॥

एवं च—

शुभाशुभविपर्यासान् सम्भवन्ति प्रतीत्य ये ।
ते स्वभावान्न विद्यन्ते तस्मात्क्लेशा न तत्त्वतः ॥२॥

यदि रागादयः स्वभावसिद्धाः स्युः तदा नैवैते शुभाशुभविपर्यासान् प्रतीत्य भवेयुः । स्वभावस्याकृत्रिमत्वादन्यनिरपेक्षत्वाच्च । यतो रागादयो क्लेशाः शुभाशुभविपर्यासान्प्रतीत्य सम्भवन्त्यतो निस्स्वभावा एवैते न तत्त्वतः सन्तीति भावः ॥२॥

अपि च—

आत्मनोऽस्तित्वनास्तित्वे न कथंचिच्च सिद्ध्यतः ।
तं विनाऽस्तित्वनास्तित्वे क्लेशानां सिद्ध्यतः कथम् ॥३॥

आत्मनो यथाऽस्तित्वनास्तित्वे न स्तः तथोक्तं विस्तरेण प्राक् । ततश्च तदाश्रितानां क्लेशानामस्तित्वनास्तित्वे न सम्भवत इति भावः ॥३॥

किंच—

कस्यचिद्धि भवन्तीमे क्लेशाः स च न सिद्ध्यति ।
कश्चिदाहो विना कश्चित्सन्ति क्लेशा न कस्य चित् ॥४॥

एते रागादयः स्वोत्पत्तौ कंचिदाश्रयमपेक्षन्ते । तमाश्रयमपेक्ष्य कस्यचिद्भवति समाश्रयः । आत्मा वा चित्तं वा स्यात् । स च प्रागेव प्रतिषिद्धः । तस्मात्कंचिदाश्रयं विना कस्यापि कश्चिदपि क्लेशा न सन्तीति भावः ॥४॥

ननु क्लेशानां पूर्वसिद्ध आश्रयो मास्तु, क्लिष्टं चित्तं प्रतीत्य क्लेशा उपजायन्ते । तच्च चित्तमपि सदैव क्लेशैरुपजायत इति चेत्तत्राह—

स्वकायदृष्टिवत्क्लेशाः क्लिष्टे सन्ति न पञ्चधा ।
स्वकायदृष्टिवत्क्लिष्टं क्लेशेष्वपि न पञ्चधा ॥५॥

स्वकायो नाम रूपादिसंघातः । तस्मिन्नात्मात्मीयदृष्टिस्स्वकायदृष्टिः । यथेयं पञ्चधा विचार्यमाणा न सम्भवति एवं पञ्चधा विचार्यमाणाः क्लेशा रागादयः क्लिष्टे चित्ते न सन्ति । यदेव क्लिष्टं स एव क्लेश इति न सम्भवति । कर्तृकर्मणोरेकत्वप्रसङ्गात् । नाप्यन्यो क्लेशः, अन्यत्क्लिष्टमिति सम्भवति । परत्र निरपेक्षत्वादक्लिष्टहेतुकक्लेशप्रसङ्गात् । एवमाधाराधेयतद्वत्तापक्षाणामप्यभावात् क्लेशेषु क्लिष्टमिति पक्षो न सम्भवति । एवमेव एकत्वान्यत्वाधाराधेयतद्वत्तापक्षाणामसम्भवात् क्लिष्टे क्लेशा इत्यपि न सम्भवतीति भावः ॥५॥

किं चान्यत्—

स्वभावतो न विद्यन्ते शुभाशुभविपर्ययाः ।
प्रतीत्य कतमान् क्लेशाः शुभाशुभविपर्ययान् ॥६॥

शुभाशुभविपर्ययान्प्रतीत्य क्लेशा भवन्तीति न सम्भवति । शुभाशुभविपर्ययानामेव स्वभावतोऽविद्यमानत्वात् । एवं हेत्वभावादपि क्लेशादयो न सम्भवन्तीति भावः ॥६॥

आलम्बनाभावाच्च क्लेशादयो न सन्तीत्याह—

रूपशब्दरसस्पर्शाः गन्धो धर्मश्च षड्विधम् ।
वस्तुरागस्य द्वेषस्य मोहस्य च विकल्प्यते ॥७॥

धर्मो नाम स्वलक्षणः । रूपरसगन्धस्पर्शशब्दधर्माः रागादीनां क्लेशानामालम्बनमिति कल्प्यते भवता । रूपादिषु शुभाकाराध्यारोपेण रागो जायते, अशुभाकाराध्यारोपेण द्वेषः, विपरीतदर्शनेन मोह इति भावः ॥७॥

रूपशब्दरसस्पर्शा गन्धो धर्मश्च केवलम् ।
गन्धर्वनगराकारा मरीचिस्वप्नसन्निभाः ॥८॥
अशुभं वा शुभं वापि कुतस्तेषु भविष्यति ।
मायापुरुषकल्पेषु प्रतिबिम्बसमेषु च ॥९॥

क्लेशानामालम्बनतया कल्पिता रूपादयो निस्स्वभावाः, गन्धर्वनगराकाराः, मरीचिस्वप्नसन्निभाश्च प्रतीयन्ते । अतः प्रतिबिम्बोपमेषु तेषु कथं रागाद्यालम्बनत्वं सिध्यति? तस्मादालम्बनाभावान्न सन्ति क्लेशा इति भावः ॥

न केवलमालम्बनमिथ्यात्वेनैव शुभाशुभयोः क्लेशनिमित्तयोर्मिथ्यात्वं प्रकारान्तरेणापीत्याह—

अनपेक्ष्य शुभं नास्त्यशुभं प्रज्ञपयेमहि ।
यत्प्रतीत्य शुभं तस्माच्छुभं नैवोपपद्यते ॥१०॥
अनपेक्ष्याशुभं नास्ति शुभं प्रज्ञपयेमहि ।
यत्प्रतीत्याशुभं तस्मादशुभं नैव विद्यते ॥११॥

इह शुभाशुभे ह्रस्वदीर्घत्वे इव परस्परसापेक्षे । अतोऽशुभमनपेक्ष्य शुभं नास्ति । यदशुभं प्रतीत्य शुभं प्रज्ञपयेमहि तदशुभं नास्ति । शुभसापेक्षत्वात् । अशुभाच्छुभमपि नोपपद्यते । एवं शुभमनपेक्ष्याशुभमपि नास्ति । यच्छुभं प्रतीत्याशुभं प्रज्ञपयेमहि तच्छुभं नास्ति । तस्मादशुभमपि नास्तीति भावः॥११॥

एवं —

अविद्यमाने च शुभे कुतो रागो भविष्यति ।
अशुभेऽविद्यमाने च कुतो द्वेषो भविष्यति ॥१२॥

शुभाशुभनिमित्तकयो रागद्वेषयोः शुभाशुभरूपनिमित्ताभावे सति नास्ति सम्भव इति भावः ॥१२॥

तदेवं शुभाशुभनिमित्ताभावेन रागद्वेषयोरभावमुपपाद्य विपर्यासाभावप्रतिपादनेन मोहस्याप्यभावं प्रतिपादयितुमाह—

अनित्ये नित्यमित्येवं यदि ग्राहो विपर्ययः।
नाऽनित्यं विद्यते शून्ये कुतो ग्राहो विपर्ययः ॥१३॥

इह चत्वारो विपर्यया उच्यन्ते। यथा अनित्ये प्रतिक्षणनाशिनि स्कन्धपञ्चके नित्यमित्यभिनिवेश एको विपर्यासः। 'यदनित्यं तद्दुःख' मिति न्यायेन अनित्ये स्कन्धपञ्चके यत्सुखं तदपि दुःखमेवेति ग्राहः स द्वितीयो विपर्यासः। एवमिदं शरीरं सर्वात्मना सततमशुचिस्वभावं, तत्र शुचित्वाभिनिवेशो तृतीयो विपर्यासः। एवं पञ्चस्कन्धात्मकमिदं अनित्यत्वादुदयव्ययधर्मित्वाच्च निरात्मकं, आत्मस्वभावशून्यं तस्मिन्नात्मग्राह आत्मत्वाभिनिवेशः चतुर्थो विपर्यासः। एवमेते चत्वारो विपर्यासा मोहस्य हेतवः। अत्र विचार्यते। यद्यनित्ये नित्यमिति ग्राहः अभिनिवेशो विपर्यासस्तदा शून्ये निस्स्वभावके जगति अनित्यमेव नास्ति। यदा चैवं तदा नित्यत्वाभिनिवेशरूपो विपर्यासः कुतो भविष्यति। नास्त्येव नित्यमिति विपर्यास इति भावः। यथा चानित्यत्वं शून्ये न सम्भवति, एवं सुखत्वाशुचित्वानात्मत्वान्यपि न सम्भवन्ति। यदा च स्वभावशून्येऽनित्यत्वादिकं न सम्भवति तदा कुतस्तद्विपक्षभूतस्य नित्यदुःखशुच्यात्मत्वादेर्विपर्यासः सम्भवति। तस्मान्नास्ति विपर्यास इति भावः ॥१३॥

ननु अनित्ये नित्यमित्यभिनिवेशो यदि विपर्ययः स्यात्तर्हि अनित्यमित्यभिनिवेशः किमविपर्यासो भवेदित्याशङ्क्य सोपि विपर्यास एवेति प्रतिपादयन्नाह—

अनित्ये नित्यमित्येवं यदि ग्राहो विपर्ययः।
अनित्यमित्यपि ग्राहो शून्ये किं न विपर्ययः ॥१४॥

स्वभावशून्ये नित्यमिति वा, अनित्यमिति वा ग्रहो न सम्भवति। यथा वन्ध्यापुत्रे। तस्मात्तत्रानित्यमित्यपि ग्रहो यदि स्यात्सोपि विपर्यास एव भवितुमर्हति। सोपि ग्राहः पूर्वोक्तरीत्या नास्त्येवेति भावः। यथाचाऽनित्ये नित्यमित्ययं ग्राहो विपर्ययो न सम्भवति। एवमन्येपि विपर्यया न सम्भवन्तीति योज्यम् ॥१४॥

ननु विपर्ययाभावेपि ग्राहोस्ति, अतस्तत्कर्तृ कर्म करण साधनान्यपि सन्ति । एवं तेषां सिद्धावस्माकमभीष्टसिद्धिरित्याशङ्क्य निराकरोति—

येन गृह्णाति यो ग्राहो ग्रहीता यच्च गृह्यते ।
उपशान्तानि सर्वाणि तस्माद्ग्राहो न विद्यते ॥१५॥

प्रत्ययपरीक्षादिषु कर्तृकर्मकरणविषयादीनामभावप्रतिपादनात् येन करणेन यो वा ग्रहीता यच्च कर्म गृह्णाति, सर्वाण्येतान्युपशान्तानि, निःस्वभावानि। अतो ग्राहोपि नास्तीति भावः ॥१५॥

इह कर्तृकर्मकरणविषयाणामभावाद्ग्राह एव न सम्भवतीति प्रतिपादितम्, ततश्च—

अविद्यमाने ग्राहे च मिथ्या वा सम्यगेव वा ।
भवेद्विपर्ययः कस्य भवेत्कस्याऽविपर्ययः ॥१६॥

मिथ्यारूपे अमिथ्यारूपे वा ग्राहे अविद्यमाने सति कस्य वा विपर्ययो भवेत्कस्य वा अविपर्ययः? न कस्यापि किंचिद्भवतीति भावः । तस्मान्नास्ति विपर्ययः ॥१६॥

ननु विपर्यासमन्तरा विपर्यस्तो न सिद्ध्यति, अस्ति च विपर्यस्तो देवदत्तः, तस्माद्विपर्यासोप्यस्तीत्याशङ्क्य निराकरोति—

नचापि विपरीतस्य सम्भवन्ति विपर्ययाः ।
नचाप्यविपरीतस्य सम्भवन्ति विपर्ययाः ॥१७॥

न विपर्यस्यमानस्य सम्भवन्ति विपर्ययाः ।
विमृषस्य स्वयं कस्य सम्भवन्ति विपर्ययाः ॥१८॥

विपरीतो विपर्ययवान्, तस्य विपर्ययान्तरसम्बन्धकल्पनं व्यर्थम् । तस्माद्विपरीतस्य विपर्ययो नास्ति । नाप्यविपरीतस्य विपर्ययः- बुद्धस्यापि विपर्ययप्रसङ्गात् । नापि विपर्यस्यमानस्य विपर्ययः- विपरीताविपरीतातिरिक्तस्य विपर्यस्यमानस्यैवाभावात् । नापि विमृषस्य=मृषारहितस्य विपर्ययः, विरोधात् । उक्तदोषाच्च । तस्मादाश्रयाभावाद्विपर्ययो नास्तीति भावः ॥१७, १८॥

किंचान्यत्—

अनुत्पन्नाः कथं नाम भविष्यन्ति विपर्ययाः ।
विपर्ययेष्वजातेषु विपर्ययगतः कुतः ॥१९॥

किमेते विपर्यया उत्पन्ना उतानुत्पन्नाः? यद्यनुत्पन्नास्तदा अनुत्पन्नभावस्याभवात्कथं विपर्यया भविष्यन्ति? विपर्ययाभावे च विपर्यस्तः कथं सिद्ध्यतीति ॥१९॥

उत्पन्ना विपर्यया इति पक्षेप्याह—

न स्वतो जायते भावः परतो नैव जायते ।
न स्वतः परतश्चेति विपर्ययगतः कुतः ॥२०॥

यथा च भावः स्वतः परतो वा न जायते तथा प्रत्ययपरीक्षायां प्रतिपादितं प्राक् । यदा चैवं विपर्ययः स्वतः परतश्च न जायते तदा विपर्ययो नास्ति । विपर्ययाभावे च विपर्ययगतः कुतः सिद्ध्यतीति भावः ॥२०॥

इतश्च नास्ति विपर्यय इत्याह—

आत्मा च शुचि नित्यं च सुखं च यदि विद्यते ।
आत्मा च शुचि नित्यं च सुखं च न विपर्ययः ॥२१॥

आत्मशुचिनित्यसुखानि विपर्यासा इत्युक्तं प्राक् । किमेतान्यात्मादीनि सन्ति? उत न सन्ति? यदि सन्ति तर्हि न विपर्यासाः, विद्यमानत्वादेतेषाम् । यदि न सन्ति तदा तेषामविद्यमानत्वादेव न विपर्यासः । अविद्यमानस्य वन्ध्यापुत्रादेर्विपर्यासाभावादिति भावः ॥२१॥

न केवलं विपर्यासस्यैवासत्त्वं ब्रूमः, किंतु अविपर्यासस्यापि नास्ति सत्त्वमिति प्रतिपादयन्नाह—

नात्मा च शुचि नित्यं च सुखं च यदि विद्यते ।
अनात्माऽशुच्यनित्यं च नैव दुःखं च विद्यते ॥२२॥

विद्यमानस्य विपर्यासासम्भवाद्यद्यात्मा शुचि नित्यं सुखं च न विद्यन्त इत्युच्यते तर्हि अनात्मा, अशुचि, अनित्यं दुःखं च नास्तीति वक्तव्यं स्यात् ।

प्रतिषेध्याभावे प्रतिषेधस्याप्यभावात् । यदा चैवमनात्मादिकं न सम्भवति तदा स्वरूपतोऽविद्यमानत्वादनात्मादिकं कथमविपर्यासस्स्यादित्यर्थः । तस्माज्जातिजरा-मरणसंसारबन्धनान्मुमुक्षुभिरेषा विपर्यासचिन्ता त्याज्येति भावः ॥२२॥

अस्य च यथोपवर्णितविपर्यासविचारस्याऽविद्यादिप्रहाणहेतुत्वेन साफल्यं प्रतिपादयन्नाह—

एवं निरुध्यतेऽविद्या विपर्ययनिरोधनात् ।
अविद्यायां निरुद्धायां संस्काराद्यं निरुध्यते ॥२३॥

यदाऽयं योगी विपर्यासान्नोलभते तदा विपर्यासाऽनुपलम्भेन तद्धेतुकाविद्या निरुद्ध्यते । तन्निरोधाच्च संस्कारादयः, अविद्याहेतुकजन्मजरामरणशोकपरिदे-वनदुःखदौर्मनस्यापायायासपर्यन्ता धर्मा निरुद्ध्यन्त इति ॥२३॥

अत्राह— यदि विपर्यासनिरोधादविद्या निरुध्यते तर्हि अस्त्येव सा अविद्या । अविद्यमानस्य निरोधाभावात् । ततश्च सन्ति तद्धेतुका रागादयः । ततश्च भवसन्ततिरपीति चेदत्रोच्यते—

यदि भूताः स्वभावेन क्लेशाः केचिद्धि कस्य चित् ।
कथं नाम प्रहीयेरन् कः स्वभावं प्रहास्यति ॥२४॥

यद्यविद्याक्लेशाश्च स्वभावेन कस्यचिद्भवेयुस्तदा तेषां प्रहाणमेव न सम्भवति । स्वभावस्यान्यथयितुमशक्यत्वात् ॥२४॥

यदि क्लेशाः स्वभावेनाऽसद्भूतास्तत्रापि प्रहाणं नोपपद्यत इत्याह—

यद्यभूताः स्वभावे न क्लेशाः केचिद्धि कस्यचित् ।
कथं नाम प्रहीयेरन् कोऽसद्भावं प्रहास्यति ॥२५॥

यदि क्लेशाः स्वभावेन न सन्ति तदा तेषां प्रहाणं न सम्भवति । अ-विद्यमानस्य प्रहाणायोगात् । नह्यग्नेरविद्यमानं शैत्यं प्रहातुं शक्यते । अतो विद्यन्त एवाविद्यादयः क्लेशा इति यदुक्तं तदसङ्गतमेवेति भावः ॥२५॥

इति सुबोधिनीव्याख्यासहितमाध्यमिककारिकासु
विपर्ययपरीक्षा नाम त्रयोविंशतितमं प्रकरणम् ।

---

सुबोधिनीव्याख्यासहित-

# माध्यमिककारिकासु,

## आर्यसत्यपरीक्षानाम चतुर्विंशतितमं प्रकरणम् ।

अत्राह पूर्ववादी, नन्वेवं सति—

**यदि शून्यमिदं सर्वमुदयो नास्ति न व्ययः ।**
**चतुर्णामार्यसत्यानामभावस्ते प्रसज्यते ॥१॥**

यदीदं सर्वं शून्यं, उदयव्ययौ च न स्तः तदा सर्वशून्यवादिनस्ते चतुर्णां दुःख, समुदय, निरोध, मार्गोपदेशरूपाणामार्यसत्यानामभावः प्रसज्यत इत्यर्थः॥ १॥

अस्तु को दोष इतिचेत्तत्राह—

**परिज्ञा च प्रहाणं च भावना साक्षिकर्म च ।**
**चतुर्णामार्यसत्यानामभावान्नोपपद्यते ॥२॥**

चतुर्णामार्यसत्यानामभावे सति, परिज्ञा=दुःखस्य परिज्ञानं, तस्यैव दुःखस्य प्रहाणं, दुःखनिरोधस्य भावना=पौनःपुन्येनानुसन्धानं, तस्यैव प्रहाणस्य साक्षिकर्म=साक्षात्कारः इत्येते नोपपद्यन्त इत्यर्थः ॥२॥

परिज्ञादीनामभावे को दोष इति चेत्तत्राह—

**तदभावान्न विद्यन्ते चत्वार्यार्यफलानि च ।**
**फलाभावे फलस्था नो न सन्ति प्रतिपन्नकाः ॥३॥**

परिज्ञादीनामभावे सति सकृदागाम्यनागाम्यर्हदाख्यं फलचतुष्टयं न सम्भवति । तत्र क्लेशानां मृदुमध्यनिबिडविरलप्रभेदभिन्नानामनेकप्रकाराणां प्रहाणमेव चतुर्धा फलत्वेन व्यपदिश्यते । फलाभावे तत्र व्यवस्थिता आर्यपुद्गला अपि न सन्ति । तत्प्रतिपन्नका अपि न सन्तीत्यर्थः ॥३॥

किंच—

**सङ्घो नास्ति न वा सन्ति तेऽष्टौ पुरुषपुद्गलाः ।**
**अभावाच्चार्यसत्यानां सद्धर्मोऽपि न विद्यते ॥४॥**

यदि चत्वार्यार्यसत्यानि न सन्ति, तदा तेषां परिज्ञादीन्यपि न सन्ति, परिज्ञाद्यभावे तल्लभ्यानां फलानामभावः । फलाभावे फलस्थानां चतुर्णां च पुरुष-

पुद्गलानां, चतुर्णां च प्रतिपन्नकपुद्गलानामभावप्रसङ्गः । सतामार्याणां धर्मस्सद्धर्मः । स च फलधर्मः, फलावतारधर्मः, निगमधर्मः, आगमधर्मश्चेति चतुर्विधः । सोपि नोपपद्यते ॥४॥

एवम्—

धर्मे चासति सङ्घे च कथं बुद्धो भविष्यति ।
एवं त्रीण्यपि रत्नानि ब्रुवाणः प्रतिबाधसे ॥५॥

धर्मे असति संघे च बुद्धोपि न स्यात् । संघस्य धर्मोपदेष्टा, उपचीयमानधर्मराशिः संघान्तर्गतो हि बुद्धः । तयोस्संघधर्मयोरभावे बुद्धः कथं स्यादित्यर्थः । तथाचैवं शून्यतां ब्रुवाणः त्वं संघधर्मबुद्धाख्यानि त्रीण्यपि रत्नानि प्रतिबाधस इति भावः ॥५॥

किंच—

शून्यतां फलसद्भावमधर्मं धर्ममेव च ।
सर्वसंव्यवहारांश्च लौकिकान्प्रतिबाधसे ॥६॥

सर्वं शून्यमिति शून्यतां ब्रुवाणस्त्वं धर्माधर्मतत्फलानि लौकिकांश्च सर्वानपि व्यवहारान् प्रतिबाधसे, ततश्च जगदान्ध्यप्रसङ्गः । ततश्चानाश्वास एव भवदीये सिद्धान्त इति भावः ॥६॥

एवं पूर्वपक्षमुपन्यस्याधुना सिद्धान्तमुपक्रमते—

अत्र ब्रूमश्शून्यतायां न त्वं वेत्सि प्रयोजनम् ।
शून्यतां शून्यतार्थं च तत एव विहन्यसे ॥७॥

"यदि सर्वमिदं शून्यमुदयो नास्ति न व्ययः" इत्यादिना अस्मानुपालम्भयन् भवान् महान्तं खेदमापन्नः । योयमस्माभिः शान्तः शून्यतार्थ इत्युक्तः स च त्वया सर्वाभावरूपतया परिगृहीतः । अतश्शून्यताशब्दार्थं शून्यतास्वरूपं वा, शून्यतायाः फलं वा न जानाति भवान् । अतश्च त्वं विहन्यसे परमार्थादिति भावः । शून्यताप्रयोजनं चास्मतत्त्वपरीक्षायामुक्तम्— "कर्मक्लेशक्षयान्मोक्षः······प्रपञ्चस्तु शून्यतायां निरुध्यते" इत्यत्र (18-5) निरवशेषप्रपञ्चोपशमार्थं शून्यतोपदिश्यते । अतस्सर्वप्रपञ्चोपशमश्शून्यतायाः प्रयोजनम् ।

भवांस्तु नास्तित्वं शून्यतार्थं परिकल्प्य तत्प्रातिपक्ष्येण प्रपञ्चमेव समर्थयमानः शून्यताप्रयोजनं न वेत्ति। ननु का पुनरत्र शून्यता नाम? एतदपि तत्रैवोक्तम्—"अपरप्रत्ययं शान्तं……एतत्तत्त्वस्य लक्षण" मिति (18-9) प्रपञ्चनिवृत्तिरूपा शून्यता, न नास्तित्वरूपेति शून्यतामपि न वेत्सि त्वम्। शून्यताशब्दार्थश्च—"यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे" इत्यादिना अत्रैव वक्ष्यते। तस्माच्छून्यताशब्दार्थमपि न वेत्सि त्वमिति भावः॥८॥

अत एवाचार्योऽभीष्टाऽविपरीतसत्यद्वयव्यवस्थामेवोपपादयन्नाह—

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।
लोकसंवृतिसत्यं च सत्यं च परमार्थतः॥८॥

लोकसंवृतिसत्यं,परमार्थसत्यं चेति सत्यद्वयमाश्रित्य भगवतां बुद्धानां धर्मदेशना प्रवर्तते। तत्र "स्कन्धात्मा लोक आख्यातः" इत्युक्त्या स्कन्धानुपादाय प्रज्ञप्यमानः पुद्गलो लोकः। समन्ताद्वरणं संवृतिः। सर्वपदार्थानां तत्त्वाच्छादनादज्ञानं संवृतिरित्युच्यते। अथ वा संवृतिस्संकेतः। अभिधानाभिधेयलक्षणो लोकव्यवहारो लोकसंवृतिरित्युच्यते। इदं च लोकसंवृतिसत्यं लङ्कावतारे विस्तरेणोक्तम्। परमार्थसत्यं तु "अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्। निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम्॥" इत्युक्तदिशा वाचामगोचरं प्रत्यात्म वेदनीयमेव। एतच्च मध्यमावतारे विस्तरेण प्रपञ्चितम्। तदेतत्सत्यद्वयमाश्रित्य बुद्धानां धर्मदेशना प्रवर्तते॥८॥

एवञ्च—

ये चानयोर्न जानन्ति विभागं सत्ययोर्द्वयोः।
ते तत्त्वं न विजानन्ति गम्भीरं बुद्धशासने॥९॥

अनयोर्यथोपवर्णितयोः विभागं ये न जानन्ति ते बुद्धशासने उपदिष्टमतिगम्भीरं तत्त्वं न जानन्तीत्यर्थः॥९॥

ननु यदि परमार्थो निष्प्रपञ्चस्वभावस्तर्हि स एवास्तु। किमनया अपरमार्थरूपया स्कन्धायतनधात्वादिरूपस्य संवृतिसत्यस्य देशनया? इत्याशङ्क्य संवृतिसत्यदेशनामन्तरा न शक्यः पपमार्थो दर्शयितुमित्याह—

व्यवहारमनाश्रित्य परमार्थो न देश्यते ।
परमार्थमनागम्य निर्वाणं नाधिगम्यते ॥१०॥

व्यवहारं--संवृतिसत्यं अनाश्रित्य परमार्थसत्यं देशयितुं न शक्यते । परमार्थसत्यमविदित्वा निर्वाणं नाधिगम्यते । तस्मात्सलिलार्थिनो भोजनमिव निर्वाणाधिगमोपायत्वात्संवृतिसत्यमवश्यं देशनीयमेवेति भावः ॥१०॥

यः संवृतिपरमार्थसत्ययोर्व्यवस्थामनाश्रित्य शून्यतां वर्णयति तम्—

विनाशयति दुर्दृष्टा शून्यतामन्धमेधसम् ।
सर्पो यथा दुर्गृहीतो विद्या वा दुष्प्रसाधिता ॥११॥

संवृतिसत्यमज्ञानमात्रसमुपस्थापितं निःस्वभावं बुध्वा तस्य परमार्थलक्षणशून्यतायामुपायत्वं प्रतिपद्यमानः प्रतिबिम्बाकाराया लोकसंवृतेरबाधनात्कर्मफलधर्माधर्मादिकमपि न बाधते । परमार्थभावस्वभावत्वेन वा न पश्यति, निःस्वभावानामेव पदार्थानां कर्मफलादिदर्शनात् । यस्तु यथोक्तसत्यद्वयविभागमनाश्रित्य संस्काराणां नास्तित्वलक्षणशून्यतामवधारयति तं मन्दधियं, दुर्दृष्टा--अन्यथा गृहीता शून्यतैव दुर्गृहीतसर्प इव विनाशयति । दुष्प्रसाधितविद्येवेति भावः॥

यतश्चेयं शून्यता मन्दप्रज्ञैः दुर्ग्राह्या, दुर्गृहीता च विनाशयति—

अतश्च प्रत्युदावृत्तं चित्तं देशयितुं मुनेः ।
धर्मं मत्वाऽस्य धर्मस्य मन्दैर्दुरवगाहताम् ॥१२॥

अस्य शून्यतालक्षणस्य धर्मस्य मन्दप्रज्ञैः दुरवगाहतामाकलय्य मुनेः बुद्धस्य चित्तं सद्धर्ममिमं देशयितुमुपदेष्टुं प्रत्युदावृत्तं प्रवृत्तमित्यर्थः ॥१२॥

तस्मात्—

शून्यतायामधिलयं यं पुनः कुरुते भवान् ।
दोषप्रसङ्गो नाऽस्माकं स शून्ये नोपपद्यते ॥१३॥

यथोक्तसत्यद्वयव्यवस्थामविज्ञाय, अभावं शून्यताशब्दार्थं परिकल्प्य, भवान् शून्यतायां--शून्यतावादे यमधिलयं--दोषोद्भावनं कुरुते स दोषप्रसङ्गोऽस्माकं नास्ति । यथोपवर्णितशून्यतावादे स नोपपद्यत इत्यर्थः । नहि वयमभावं शून्यतार्थं ब्रूमः । किंतु प्रतीत्यसमुत्पादमेव शून्यतामङ्गीकुर्म इति भावः ॥१३॥

न केवलं यथोक्तदोषप्रसङ्गोऽस्मत्पक्षे नावतरति, किंतु सत्यादिव्यवस्थानं सर्वमेवोपपद्यत इत्याह—

सर्वं च युज्यते तस्य शून्यता यस्य युज्यते।
सर्वं न युज्यते तस्य शून्यं यस्य न युज्यते ॥१४॥

यस्येयं शून्यता युज्यते तस्य सर्वमेतद्यथोपवर्णितं युज्यते। यतो वयं प्रतीत्यसमुत्पादमेव शून्यतामाचक्ष्महे। यस्येयं शून्यता युज्यते तस्य दुःखं युज्यते- प्रतीत्यसमुत्पन्नत्वाद्दुःखस्य। एवं चत्वार्यार्यसत्यानि, दुःखपरिज्ञानं, दुःखनिरोधः, निरोधसाक्षात्करणं, मार्गभावनारूपाणि फलानि, सद्धर्मः, तदुपदेष्टा बुद्धश्चेति सर्वमेव युज्यते। अपिच त्रीण्यप्यार्यरत्नानि, सर्वो लौकिको व्यवहारश्च तस्य युज्यन्ते। यस्य तु यथोपवर्णिता शून्यता न युज्यते तस्य सर्वमेव न युज्यते। प्रतीत्यसमुत्पादाभावात्। यथा च न युज्यते तथा विस्तरेण प्रतिपादयिष्यति ॥१४॥

एवं च—

स त्वं दोषानात्मनीनानस्मासु परिपातयन्।
अश्वमेवाधिरूढस्सन्नश्वमेवापि विस्मृतः ॥१५॥

सुपरिशुद्धतरे आस्माकीने पक्षे भवत्पक्षीयदोषान् परिपातयन् त्वं प्रतीत्यसमुत्पादलक्षणशून्यतारूपमश्वमधिरूढस्सन् तमेव प्रतीत्यसमुत्पादलक्षणमश्वं विस्मृतवानसीति अहो मोहान्धता तवेति भावः ॥१५॥

के पुनस्ते परस्य दोषाः? याननुपलभमानः शून्यतावादिनमुपालभत इति चेत्तान् दोषानाह—

स्वभावाद्यदि भावानां सद्भावमनुपश्यसि।
अहेतुप्रत्ययान् भावान् त्वमेवं सति पश्यसि ॥१६॥

यदि भावानां स्वभावादेव सद्भावमङ्गीकरोषि तदा भावा अहेतुप्रत्यया— हेतुप्रत्ययरहितास्स्युरिति भावः ॥१६॥

तथा सति—

कार्यं च कारणं चैवं कर्तारं करणं क्रियाम्।
उत्पादं च निरोधं च फलं च प्रतिबाधसि ॥१७॥

भावानामहेतुकत्वाभ्युपगमाद्घटादीनां स्वभावत एव विद्यमानत्वात्कर्तृकरणक्रियाणामुत्पादनिरोधयोश्चाभावः प्रसज्यते । स्वाभाविकस्य भावस्य कार्यत्वकारणत्वयोरप्यपेक्षा नास्ति । तस्मात्सर्वमेतद्भवत्पक्षे नोपपद्यत इति भावः॥१७॥

अस्माकं तु भावस्वभावशून्यतावादिनां सर्वमेतदुपपद्यत इत्याह—

यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे ।
सा प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा ॥१८॥

यः प्रतीत्यसमुत्पादः हेतुप्रत्ययसापेक्षकार्योत्पादः, तामेव वयं शून्यतां ब्रूमः, नत्वभावम् । शून्यतनामभावानां स्वभावेनाऽनवस्थानात् । सकारणभावोत्पत्तिरित्यर्थः । सैव शून्यता उपादाय प्रज्ञप्तिरिति, मध्यमा प्रतिपदिति चोच्यते। कारणमुपाय कार्यं प्रज्ञप्यते,अत्र उपादायप्रज्ञप्तिरित्युच्यते । भावाभावान्तद्वयरहितत्वान्मध्यमा प्रतिपदित्युच्यते । तदेवं प्रतीत्यसमुत्पादस्यैवैता विशेषसंज्ञाः–शून्यता, उपादायप्रज्ञप्तिः, मध्यमा प्रतिपदिति च ॥१८॥

एवम्—

अप्रतीत्यसमुत्पन्नो धर्मः कश्चिन्न विद्यते ।
यस्मात्तस्मादशून्योऽभिधर्मः कश्चिन्न विद्यते ॥१९॥

यस्मादप्रतीत्य समुत्पन्नः कश्चिदपि भावो नोपपद्यते तस्मादशून्यः शून्यतारहितः स्वाभाविकः कोप्यभिधर्मः नास्तीति भावः ॥१९॥

भवतस्तु स्वभाववादिनः—

यद्यशून्यमिदं सर्वमुदयो नास्ति न व्ययः ।
चतुर्णामार्यसत्यानामभावस्तु प्रसज्यते ॥२०॥

यदा चेदं सर्वमशून्यं, सत्स्वभावं तदा उदयो नास्ति । व्ययोपि नास्ति । तयोरभावे आर्यसत्यानामप्यभावः प्राप्नोतीति भावः ॥२०॥

तथा हि—

अप्रतीत्य समुत्पन्नं कुतो दुःखं भविष्यति ।
अनित्यमुक्तं दुःखं हि तत्स्वाभाव्येन युज्यते ॥२१॥

यद्धि सत्स्वभावं तन्न प्रतीत्यसमुत्पद्यते, यदप्रतीत्यसमुत्पन्नं न तदनि-

त्वं भवति। भगवता च दुःखमनित्यमित्युक्तम्। तथा च भावानां स्वाभाव्ये सत्स्वभावाङ्गीकारे तन्न युज्यते ॥२१॥

एवं दुःखस्यानुपपत्तिमुक्त्वा समुत्पादस्याप्यसम्भवमाह—

**स्वभावतो विद्यमानं किं पुनस्समुदेष्यते।**
**तस्मात्समुदयो नास्ति शून्यं तां प्रतिबाधतः ॥२२॥**

समुदयत्यस्माद्दुःखमिति समुदयो दुःखस्य हेतुः। शून्यतां प्रतिबाध्य सत्स्वभावं दुःखमभ्युपगच्छतस्तव समुदयोपि न सिद्ध्यति। सत्स्वभावस्य दुःखस्य उत्पादाऽसम्भवात्। तस्मात्समुदयोपि तव न सिद्ध्यतीति भावः ॥२२॥

स्वाभाविकं दुःखमभ्युपगच्छतस्तव निरोधोऽपि दुर्घट इति प्रतिपादयन्नाह—

**न निरोधस्स्वभावेन सतो दुःखस्य विद्यते।**
**स्वभावपर्यवस्थानान्निरोधं प्रतिबाधसे ॥२३॥**

स्वभावेन विद्यमानस्य दुःखस्य निरोधो न सम्भवति। तस्मादेवं स्वभावं गृहीत्वा प्रत्यवतिष्ठमानस्त्वं निरोधमपि बाधसे ॥२३॥

आर्यमार्गोपि स्वभाववादिनां यथा नोपपद्यते तथा प्रतिपादयन्नाह—

**स्वाभाव्ये सति मार्गस्य भावना नोपपद्यते।**
**अथासौ भाव्यते मार्गः स्वाभाव्यं ते न विद्यते ॥२४॥**

यदि मार्गः स्वाभाव्येनैव भवेत्तदाऽसौ भावनामन्तरेणैव व्यवस्थित इति किं तस्य भावनया? अव्यवस्थितस्य भावना, न व्यवस्थितस्य। असौ मार्गो भाव्यते त्वया। ततश्च सत्स्वभावता भवदभिमता भावानां नास्तीति भावः ॥२४॥

किं च—

**यदा दुःखं समुदयो निरोधश्च न युज्यते।**
**मार्गो दुःखनिरोधत्वात्कतमं प्रापयिष्यति ॥२५॥**

दुःखस्य भवन्मते स्वाभाविकत्वान्नास्ति दुःखनिरोधः। यं मार्गो सम्भावितः प्रापयिष्यति। एवं भावानां सत्स्वभाववादिनस्ते आर्यसत्यानां चतु-

र्णामभावः प्राप्नोति । किंच मार्गस्य दुःखनिरोधोपायत्वात्तदभावे कं प्रापयिष्य ति? न कमपि प्रापयिष्यतीति व्यर्थोऽयं मार्गोपदेश इति भावः ॥२५॥

इदानीं दुःखादिपरिज्ञानमपि यथा न सम्भवति तथा प्रतिपादयन्नाह—

स्वभावेनाऽपरिज्ञातं यदि तस्य पुनः कथम् ।
परिज्ञानं ननु किल स्वभावस्समवस्थितः ॥२६॥

यदि दुःखं स्वभावेनापरिज्ञातं, अपरिज्ञातस्वभावं यदीत्यर्थः । तस्य तादृशस्य दुःखस्य कथं पुनः परिज्ञानं सम्भवति । यतः स्वभावो व्यवस्थितः किल। अपरिज्ञातस्वभावस्य परिज्ञाने स्वभावभङ्गप्रसङ्गादिति भावः ॥२६॥

यदा दुःखपरिज्ञानं नास्ति तदा—

प्रहाणसाक्षात्करणे भावना चैवमेव ते ।
परिज्ञावन्न युज्यन्ते चत्वार्यपि फलानि च ॥२७॥

समुदयस्य प्रहाणम्, निरोधस्य साक्षात्करणम्, मार्गस्य भावना चेति त्रयं परिज्ञावदेव न युज्यते । अतश्च चत्वार्यार्यफलान्यपि न सम्भवन्तीतिभावः॥२७॥

न केवलं फलानामेव परिज्ञावदसम्भवः, किंत्वधिगमोऽप्येषां न सम्भवतीति प्रतिपादयन्नाह—

स्वभावेनाऽनधिगतं यत्फलं तत्पुनः कथम् ।
शक्यं समधिगन्तुं स्यात्स्वभावं परिगृह्णतः ॥२८॥

भावस्वभाववादिनस्स्वभावस्यान्यथयितुमशक्यत्वात्पूर्वमनधिगतं फलं पश्चात्कथमधिगन्तुं शक्यं स्यात् । पश्चादप्यनधिगतमेवेति भावः ॥२८॥

फलस्यानधिगमे दोषमाह—

फलाभावे फलस्थानां न सन्ति प्रतिपन्नकाः ॥
सङ्घो नास्ति न चेत्सन्ति तेऽष्टौ पुरुषपुद्गलाः ॥२९॥
अभावाच्चार्यसत्यानां सद्धर्मोपि न विद्यते ।
धर्मे चाऽसति सङ्घे च कथं बुद्धो भविष्यति ॥३०॥

कारिकाद्वयस्यास्य पूर्ववदेवाऽर्थो वेदितव्यः ॥३०॥

किंच स्वभावादिनः—

अप्रतीत्यापि बोधिं च तव बुद्धः प्रसज्यते।
अप्रतीत्यापि बुद्धं च तव बोधिः प्रसज्यते ॥३१॥

बुद्धबोधयोर्द्वयोरपि स्वभावसिद्धत्वेन परस्परनिरपेक्षत्वात् बोधिं सर्वज्ञज्ञानमप्राप्यापि बुद्धः स्यात्। एवं बुद्धमनपेक्ष्यापि बोधिस्स्यात्। "अकृत्रिमः स्वभावो हि निरपेक्षः परत्र च" इति वचनात् ॥३१॥

किंचाऽन्यत्—

यश्चाऽबुद्धः स्वभावेन स बोधाय घटन्नपि।
न बोधिसत्वचर्यायां बोधिस्तेऽधिगमिष्यति ॥३२॥

यश्चाऽबुद्धस्वभावः पुरुषपुद्गलः स बोधिसत्वचर्यायां बौद्धधर्मे बोधाय प्रयतमानोपि बोधिं नाऽधिगमिष्यति। तव स्वभाववादिनो मते स्वभावस्यान्यथयितुमशक्यत्वादिति ॥३२॥

किंच—

न हि धर्ममधर्मं वा कश्चिज्जातु करिष्यति।
किमशून्यस्य कर्तव्यं स्वभावः क्रियते न हि ॥३३॥

यतः स्वभावः कर्तुं न शक्यतेऽतः अशून्यस्य—स्वभाववादिनः कर्तव्यं किमपि नास्ति। ततश्च केनापि कदापि धर्माधर्मयोर्न यत्न आस्थेयः। तयोः स्वभावसिद्धत्वादिति भावः ॥३३॥

किंच—

विना धर्ममधर्मं च फलं तव भविष्यति।
धर्माधर्मनिमित्तं च फलं तव न विद्यते ॥३४॥

तव मते फलस्य स्वाभाविकत्वेन विनापि धर्माधर्मौ तत्फलं भविष्यति। धर्माधर्मनिमित्तं च फलं तव न सम्भवति। स्वाभाविकत्वादेवेति भावः ॥३४॥

किंच—

धर्माधर्मनिमित्तं वा यदि तद्विद्यते फलम्।
धर्माधर्मसमुत्पन्नमशून्यं तत्कथं फलम् ॥३५॥

यदि तत्फलं धर्माधर्मनिमित्तमेव विद्यत इत्युच्यते, तदा धर्माधर्मनिमित्तं तत्फलं कथमशून्यमिति शक्यते वक्तुम् । धर्माधर्मौ प्रतीत्य समुत्पन्नं फलं शून्यमेव भवितुमर्हति । नाऽशून्यमिति भावः ॥३५॥

किंच—

सर्वसंव्यवहारांश्च लौकिकान्प्रतिबाधसे ।
यत्प्रतीत्य समुत्पादं शून्यतां प्रतिबाधसे ॥३६॥

स्वभाववादमाश्रित्य प्रतीत्यसमुत्पादरूपां शून्यतां यदि प्रतिबाधसे तदा गच्छ पिब तिष्ठेत्यादिसर्वलौकिकव्यवहारानपि प्रतिबाधसे । सर्वेषामपि तेषां बोधिं प्रतीत्यसमुत्पन्नत्वात् ॥३६॥

किंच—

न कर्तव्यं भवेत्किंचिदनारब्धा भवेत्क्रिया ।
कारकः स्यादकुर्वाणः शून्यतां प्रतिबाधतः ॥३७॥

भावानां स्वभावाङ्गीकारे भावस्व स्वभावतो विद्यमानत्वान्न केनचित्किंचित्कर्तव्यं स्यात् । शून्यतामनङ्गीकुर्वाणस्य तव क्रियाया अनारम्भप्रसङ्गः । अकुर्वाणस्यैव कर्तृत्वं, अजातस्यैव कार्यत्वमित्याद्यापद्यते ॥३७॥

किंच—

अजातमनिरुद्धं च कूटस्थं च भविष्यति ।
विचित्राभिरवस्थाभिः स्वभावरचितं जगत् ॥३८॥

यदि जगत्स्वभावरचितं, प्रतीत्यसमुत्पन्नं स्यात्तदा विचित्राभिरवस्थाभिरुपपन्नं स्यात् । स्वभाववादे तु अजातमनिरुद्धं कूटस्थं च भवेत् । तदा जगद्वैचित्र्यं न स्यादिति भावः ॥३८॥

किंचान्यत्—

असम्प्राप्तस्य सम्प्राप्तिः दुःखपर्यन्तकर्म च ।
सर्वक्लेशप्रहाणं च यद्यशून्यं न विद्यते ॥३९॥

सर्वमेतद्यद्यशून्यं, सत्स्वभावं स्यात्तदा असम्प्राप्तस्य सम्प्राप्तिर्न विद्यते । कुतः? असम्प्राप्तस्वभावस्य सम्प्राप्तौ स्वभावविपर्ययप्रसङ्गात् । एवं दुःखस्य पर्य-

न्तकर्मापि न स्यात्। पूर्वमविद्यमानस्वभावस्य दुःखनिरोधस्याधुना विद्यमानत्वे पूर्ववत्स्वभावविपर्ययापातात्। पूर्वं विद्यमानस्वभावानां सर्वक्लेशानां प्रहाणमपि न स्यादिति भावः ॥३९॥

अतः—

यः प्रतीत्यसमुत्पादं पश्यतीदं स पश्यति ॥
दुःखं समुदयं चैव निरोधं मार्गमेव च ॥४०॥

यः प्रतीत्यसमुत्पादलक्षणां सर्वशून्यतां पश्यति सर्वमिदमनुपपन्नं पश्यति, दुःखसमुदयनिरोधमार्गादिकं यद्यद्भावस्वभाववादे ऽनुपपन्नं तत्सर्वमप्युपपन्नं पश्यतीति भावः ॥४०॥

इति सुबोधिनीव्याख्यासहितमाध्यमिककारिकासु
आर्यसत्यपरीक्षा नाम चतुर्विंशतितमं प्रकरणम्।

---

सुबोधिनीव्याख्यासहित-

# माध्यमिककारिकासु,

## निर्वाणपरीक्षानाम पञ्चविंशतितमं प्रकरणम्।

ननु भगवता बुद्धेन निर्वाणद्वयमुपदिष्टम्— सोपधिशेषं, निरुपधिशेषं चेति। तत्र निरवशेषस्याऽविद्यारागादिक्लेशगणस्य प्रहाणात्सोपधिशेषं निर्वाणं सिद्ध्यति। उपधीयतेऽस्मिन्नात्मस्नेह इत्युपधिः। आत्मप्रज्ञप्तिनिमित्ताः पञ्च उपादानस्कन्धाः उपधिरित्युच्यन्ते। शिष्यत इति शेषः। उपधिरेव शेष उपधिशेषः। तेन सह वर्तत इति सोपधिशेषं निर्वाणम्। तत्र च सत्कायदृष्ट्यादिक्लेशतस्कररहितं स्कन्धमात्रमेव केवलमवशिष्यते। निहताशेषचोरगणग्रामवत्। यत्र तु निर्वाणे निहताशेषचोरगणग्रामस्याभाववत्स्कन्धमात्रमपि नास्ति, तन्निरुपधिशेषं निर्वाणम्। एतद्द्विविधमपि निर्वाणं क्लेशानां स्कन्धानां च निरोधाद्भवति। एवं च—

यदि शून्यमिदं सर्वमुदयो नास्ति न व्ययः।
प्रहाणाद्वा निरोधाद्वा कस्य निर्वाणमिष्यते ॥१॥

क्लेशानां प्रहाणात्सोपधिशेषनिर्वाणम् । स्कन्धानामपि निरोधान्निरुपधिशेषनिर्वाणं च भवति । यदीदं सर्वं शून्यं स्यात्तदा उदयो नास्ति । व्ययोपि नास्ति । एवं च क्लेशानां स्कन्धनां चाभावात्प्रहाणनिरोधयोरभावः प्राप्नोति । तथा च निर्वाणमेव न स्यात् । तस्मादस्ति भावानां स्वभाव इति भावः ॥१॥

अत्रोच्यते— भावानां स्वभावाङ्गीकार एवाऽयं दोषः प्राप्नोति, न शून्यताङ्गीकार इति प्रतिपादयन्नाह—

यद्यशून्यमिदं सर्वमुदयो नास्ति न व्ययः ।
प्रहाणाद्वा निरोधाद्वा कस्य निर्वाणमिष्यते ॥२॥

इदं सर्वं यद्यशून्यं प्रतीत्यसमुत्पादरहितम्, स्वाभाविकमेव यदि तदा क्लेशानां स्कन्धानां च स्वभावेन विद्यमानत्वात् स्वभावस्याऽपयितुमशक्यत्वादुदयो वा व्ययो वा नास्ति । अतश्च प्रहाणाद्वा निरोधाद्वा कस्य निर्वाणमिष्यते । स्वभाववादिनः कथमपि निर्वाणं न सम्भवतीति स्वभाववादिन एवायं दोषः, न शून्यतावादिन इति भावः ॥२॥

ननु शून्यतावादिनो निवृत्तिलक्षणं यदि नेच्छन्ति तर्हि किं लक्षणं तदिच्छन्तीत्यत्राह—

अप्रहीणमसम्प्राप्तमनुच्छिन्नमशाश्वतम् ।
अनिरुद्धमनुत्पन्नमेतन्निर्वाणमुच्यते ॥३॥

यद्धि नैव प्रहीयते रागादिवत्, नैव प्राप्यते श्रामण्यफलादिवत्, नैवोच्छिद्यते क्लेशादिवत्, नैव शाश्वतं स्वभाववत्, नैव निरुद्ध्यते दुःखादिवत्, नैवोत्पद्यते घटादिवत्, शिवं सर्वप्रपञ्चोपरमलक्षणं निर्वाणमुच्यते । तत्र च विकल्पानां नास्त्यवकाशः । सर्वप्रपञ्चोपरमलक्षणत्वात्तस्य । ननु निर्वाणे नसन्ति क्लेशाः, नापि स्कन्धाः, तथापि निर्वाणात्प्राक्सन्ति ते । अतस्तेषां प्रहाणमेव निर्वाणमिति चेदत्रोच्यते— यदि निर्वाणात्प्राक्स्वभावतस्सन्ति क्लेशाः तर्हि तेषां प्रहाणं न सम्भवति । विद्यमानस्वभावस्य प्रहाणायोगात् । तस्मान्निर्वाणाभिलाषिणा त्याज्यैवैषा कल्पनेति भावः ॥३॥

ये तु सर्वकल्पनोपशमरूपं निर्वाणमप्रतिपद्यमाना भावमभावं तदुभयरूपं वा निर्वाणं परिकल्पयन्ति तान्प्रत्याह—

भावस्तावन्न निर्वाणं जरामरणलक्षणम्।
प्रसज्येतास्तिभावो हि न जरामरणं विना ॥४॥

अत्र केचित् क्लेशकर्मजन्मसन्तानप्रवृत्तेः नियतो रोधो यः स निर्वाणं, स च स्थायीभावरूप इति वदन्ति तान्प्रत्याह— निर्वाणं तावन्न भावो भवितु मर्हति। तथासति जरामरणलक्षणं तत्प्रसज्यते। कुतः जरामरणरहितस्य कस्यापि भावस्यासम्भवात्। तस्माद्भावरूपं निर्वाणमिति न शक्यते वक्तुम् ॥४॥

किंच—

भावश्च यदि निर्वाणं निर्वाणं संस्कृतं भवेत्।
नाऽसंस्कृतो विद्यते हि भावः क्वचन कश्चन ॥५॥

यदि निर्वाणं भावरूपं स्यात् तर्हि तद्विज्ञानादिवत्संस्कृतमेव भवेत्। न हि भावो नाम बाह्य आभ्यन्तरो वा क्वचिदपि कोपि असंस्कृतोस्ति। तस्माद्भावरूपं निर्वाणं न भवतीति भावः ॥५॥

किंच—

भावश्च यदि निर्वाणमनुपादाय तत्कथम्।
निर्वाणं नाऽनुपादाय कश्चिद्भावो हि विद्यते ॥६॥

यदि निर्वाणं भावस्यात्तदा तदुपादाय स्वकारणसामग्रीं भवेत्। यतोऽनुपादाय सामग्रीं कश्चिदपि भावो नास्ति। यदि उपादाय भवेत्तदा तत्कथं निर्वाणं स्यात। निर्वाणस्याकार्यत्वादिति भावः ॥६॥

ननु निर्वाणस्य भावत्वे दोषप्रसङ्गादभावरूपमेव तर्हि निर्वाणमस्तु इत्याशङ्क्य प्रतिक्षिपति—

यदि भावो न निर्वाणमभावः किं भविष्यति।
निर्वाणं, यत्र भावो न नाभाऽवस्तत्र विद्यते ॥७॥

यथा निर्वाणं भावरूपं न भवति एवमभावरूपमपि न भवति। ननु क्लेशजन्मनोरभाव एव निर्वाणमिति चेत्तर्हि क्लेशजन्मनोरनित्यतैव निर्वाणमि-

यदि शून्यमिदं सर्वमुदयो नास्ति न व्ययः ।
प्रहाणाद्वा निरोधाद्वा कस्य निर्वाणमिष्यते ॥१॥

क्लेशानां प्रहाणात्सोपधिशेषनिर्वाणम् । स्कन्धानामपि निरोधान्निरुपधिशेषनिर्वाणं च भवति । यदीदं सर्वं शून्यं स्यात्तदा उदयो नास्ति । व्ययोपि नास्ति । एवं च क्लेशानां स्कन्धनां चाभावात्प्रहाणनिरोधयोरभावः प्राप्नोति । तथा च निर्वाणमेव न स्यात् । तस्मादस्ति भावानां स्वभाव इति भावः ॥१॥

अत्रोच्यते— भावानां स्वभावाङ्गीकार एवाऽयं दोषः प्राप्नोति, न शून्यताङ्गीकार इति प्रतिपादयन्नाह—

यद्यशून्यमिदं सर्वमुदयो नास्ति न व्ययः ।
प्रहाणाद्वा निरोधाद्वा कस्य निर्वाणमिष्यते ॥२॥

इदं सर्वं यद्यशून्यं प्रतीत्यसमुत्पादरहितम्, स्वाभाविकमेव यदि तदा क्लेशानां स्कन्धानां च स्वभावेन विद्यमानत्वात् स्वभावस्याऽपयितुमशक्यत्वादुदयो वा व्ययो वा नास्ति । अतश्च प्रहाणाद्वा निरोधाद्वा कस्य निर्वाणमिष्यते । स्वभाववादिनः कथमपि निर्वाणं न सम्भवतीति स्वभाववादिन एवायं दोषः, न शून्यतावादिन इति भावः ॥२॥

ननु शून्यतावादिनो निवृत्तिलक्षणं यदि नेच्छन्ति तर्हि किं लक्षणं तदिच्छन्तीत्यत्राह—

अप्रहीणमसम्प्राप्तमनुच्छिन्नमशाश्वतम् ।
अनिरुद्धमनुत्पन्नमेतन्निर्वाणमुच्यते ॥३॥

यद्धि नैव प्रहीयते रागादिवत्, नैव प्राप्यते आम्रफलादिवत्, नैवोच्छिद्यते क्लेशादिवत्, नैव शाश्वतं स्वभाववत्, नैव निरुद्ध्यते दुःखादिवत्, नैवोत्पद्यते घटादिवत्, शिवं सर्वप्रपञ्चोपरमलक्षणं निर्वाणमुच्यते । तत्र च विकल्पानां नास्त्यवकाशः । सर्वप्रपञ्चोपरमलक्षणत्वात्तस्य । ननु निर्वाणे नसन्ति क्लेशाः, नापि स्कन्धाः, तथापि निर्वाणात्प्राक्सन्ति ते । अतस्तेषां प्रहाणमेव निर्वाणमितिचेदत्रोच्यते— यदि निर्वाणात्प्राक्स्वभावतस्सन्ति क्लेशाः तर्हि तेषां प्रहाणं न सम्भवति । विद्यमानस्वभावस्य प्रहाणायोगात् । तस्मान्निर्वाणाभिलाषिणा त्याज्यैवैषा कल्पनेति भावः ॥३॥